॥ श्रीरस्तु ॥

॥ श्रीचन्द्रमौळीश्वराय नमः ॥

# ॥ आचार्यचरितम् ॥

श्रीमत्परमहंसपरिव्राजकाचार्य श्रीशंकरभगवत्पादानां चरितं यथाचरित-
मधिजिगमिषूणामत्यन्तोपकाराय सद्विद्योत्पलचन्द्रिकाख्यगीर्वाण-
पाठशालास्थापकाध्यापकैः कुम्भघोणनगरकमलाकरकलहंस
श्रीरामस्वामिशास्त्रिणां तनूभवैः नारायणशास्त्रिभिः
प्रणीतम् ।



१८८४ तमसंवत्सरे चेन्नपुर्यां मुद्रापितात् समुद्धृत्य
अखिलभारतशंकरसेवासमित्या प्रकाशितम् ॥

॥ श्रीः ॥

# ॥ श्रीमदाचार्यचरितम् ॥



सर्वतन्त्रस्वतन्त्राय सदात्माद्वैतवेदिने ।
श्रीमते शंकरार्याय वेदान्तगुरवे नमः ॥

पुरा किल पराक्रममाणे पृथिवीमखिलसुचरितकालमृत्यौ कलौ, दुरासदेषु सूनृतवादिषु, दुरभिभवेषु दुर्मतेषु, दूरमुत्सारितेष्वभिजातेषु, दूषितेषु महादर्शनेषु, दुर्लभेषु महाहवेषु, तथागतपथागतहृदयेषु आनृपालमाचण्डालमखिलेष्ववनिजुषां निवहेषु, दुरापेष्वसंकीर्णेषु, दुर्विभजेषु विप्रेषु, दुरालोकधरणिदुर्दशानिशामनदूयमानमानसा दिवौकसो दिवस्पतिबृहस्पतिप्राग्रहाराः हरासनपरिपूतमतिललितगणयुवतिवैलासधामानं कैलासनामानमचलमाप्नुवन्तः, समतीतवाङ्मनससरणिं आदृतऋक्सामघोषं अपगतपुरुषायुषपरिमेयभावं आहितब्रह्मवर्चसोपचयं अत्युल्लसदनादिस्त्रीपुंसगार्हपत्यं अनधिगम्यनक्तंदिवमस्य शिखरमधिरूढाः शशिशकलशेखरमाम्नायशिरोभिरुपश्लोकयांचक्रिरे ॥

तदनु तदनुश्रवोद्धूतनवनवनवनारवमुखरितहरिन्मुखान् ऋभुक्षिमुखानमरप्रमुखानखिलानवलोक्य, करुणार्द्रचेता भगवान् भवानीपतिर्भुवनभावितमखिलमुदन्तजातमधिगम्य, निरुपधिस्नेहदयाविस्फारितेन विकसितसिताम्भोजपलाशशोभिना, वर्षतेव सत्त्वसंचयं, विभावयतेवाद्वैतवर्षं, वितरतेव हर्षं, विसृजतेव सकलभुवनपावनीममरधुनीं, वितन्वतेव श्रितजनमनश्चकोरनिकराह्लादिकां कौमुदिकां, अमृतमयूखेन चक्षुषैकेन, निकटस्थितं, 'अयि, परमानन्दपारावारमधितिष्ठन् न

जानासि दुर्दशामवनेः' इति संधुक्षयन्निव रजतवेत्रलतया, कुमार-मवलोकयन्, "अवतरतु भवानवनीं; आतनोतु जैमिनीयतन्त्रमखिल-जनादरणीयं; आस्थापयतु कर्ममार्गनैरत्यमखिलजनानां; आचरतु स्वयं च यथास्थापितं वत्सोऽपि" इत्यादिशन्, अन्यतः स्थितमखिलभुवन-पालनबद्धदीक्षमधोक्षजं, "अयि त्वयि भुवनभरणनियुक्तेऽप्येवमुपप्लवो भुवः इति परिहासास्पदमिदम्" इति दर्शयतेव हसितेन, सजवमवनि-मवतरितुमाज्ञापयन्, "अहमपि महीमवतीर्णस्तूर्णमर्णवमिव कलानिधि-रद्वैतमुद्वेलयिष्यामि" इति घनाघनस्तनितगभीरया गिरा सुरानाश्वासयन्, तानपि प्राचीनबर्हिर्मुखान् बर्हिर्मुखानात्मकार्यसाहचर्याय प्रथममेव पृथिवीमवगाढुमाज्ञापयन्, आर्यया सह सुपर्ववर्यकृतसपर्यस्तिरोदधे ॥

तदनन्तरमनन्तरमनन्तरञ्जनमनन्तादिषु वचनमिदमाम्नायलम्ब-मालम्ब्य यथायथमवनिमवतीर्णेषु, तरुणशशिशकलशेखरस्स भूतभावनो भगवान्हरः, केरळेषु शशलाग्रहारे चिरात्तपस्यतः सुत्युः सत्यपरस्य स्वपदपद्मपंजरराजहंसीकृतमानसस्य सततात्मानुसंधाननिरस्तजीवब्रह्म-भेदस्य ब्रह्मण्यस्य ब्रह्मणः शिवगुरोरार्यासमानायामार्याभिधानायामति-साध्व्यामचलायां आम्नाय इव मूर्तिमानर्थ्यसंज्ञः शंकरनामा प्रादुरासीत्। स च शंकरः स्वयमनपायनित्यसंस्कारोऽपि तानवीं मानवीं सरणिमनु-सरन्नाजातकर्मोपनयनमम्बकाहितमखिलमपि संस्कारजातमभ्युपेत्य, विद्ये-श्वरोऽपि गुरुमुखादिव समादाय समुपस्कृतत्रयीपद्यास्सदन्तर्वाणिहृद्या निरवद्याश्च विद्याः, प्रबोध इव वपुष्मानाचार्यः, तदनुशिष्टोऽपि विसृष्ट-गार्हस्थ्याभिलाषः, सवित्र्याः सनीडमतिसुखमासामास। ततश्च जातु तस्मिन्नवतीर्णे चूर्णीसलिलमवगाहाय, चरणमवलम्बितवति च दुष्परिहारे कस्मिंश्चिदवहारे, "मातः, इतोऽपि वा मामनुजानीहि संयमाय"

॥ श्रीरस्तु ॥

## ॥ इयमियमत्र विज्ञापना ॥

इह खलु निखिलमहामंत्रसवित्र्या गायत्र्याः प्रदानादानयोः प्रधानाधिकारितया, प्रजापतिमुखकमलसंभूततया, प्रसिद्धयजनयाजनादि-कर्मषट्कार्हतया [षड्नवकार्हतया] सर्वसुपर्वस्वरूपतया च "भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीवनाः । बुद्धिमत्सु नराः श्रेष्ठाः नरेषु ब्राह्मणाः स्मृताः । ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ॥" इत्यादिभिः ब्राह्मणानां अखिलोत्कृष्टत्वात्, तेषां च "स्वाध्यायोध्येतव्यः" इति वेदस्य नियताध्येतव्यत्वात्, ततोपि "अधीत्य वेदं न विजानाति योर्थं" "स्थाणुरयं भारहारः किलाभूत्" "योर्थवित्सकलं भद्रमश्नुते" इत्याद्युक्तिरीत्या तदर्थस्य वेदितव्यत्वात् तस्य च वेदस्य विविधपुराणेति-हासाद्युपबृंहणोपबृंहितत्वात्, तेषामप्युपबृंहणानां अभिधादिविविध-विधाभिधानदुरवगमार्थसार्थत्वात्, तेषामप्यर्थानां अतुलप्रतिभावदेक-गम्यत्वात्, तस्याश्च प्रतिभायाः बहुविधशास्त्रपरिशीलनजन्यत्वात्, तेषां च शास्त्राणां अनन्तहायनाध्ययनसाध्यत्वात्, तस्य चाध्ययनस्य जन्मान्तर-शतनिचितचिरसुचरितभरसुलभत्वात्, तत्त्वस्य च नियतिवशंवदत्वात्, तद्वतामतद्वतां, विदुषामविदुषां, सामान्यतः "तद्विज्ञानार्थं स गुरुमेवाभि-गच्छेत्" इत्यनेन सद्गुरुसमाश्रयणस्य उक्तत्वात्, तेषां च सद्गुरूणां कालवशात् दुर्ज्ञेयत्वात्, तेन च तद्विमर्शस्य अवश्यकार्यत्वात्, ततश्च गुरोस्सदसत्वयोः अवश्यविमृश्यत्वाच्च पूज्यैरिदमिदमाचार्यचरितमाकर्ण-नीयम् ॥

अपिच अधुनैव कलिराकलितसमग्रसामग्रिरवनिमवतीर्णः परिपूर्ण-तामवगाहते । तथा हि – अस्य बीजावापः श्रुतिशिरोवैमुख्योत्पत्तिः, अंकुरः सुधीसुभाषितविरतिः, अंघ्रिराचार्यनिराकृतिः, आदिपल्लवः

स्वैरमतिः, अग्रकाण्डः परगतपरिस्थितिः, प्रकाण्डः परिपन्थितन्त्र-विस्तृतिः, प्रतानः स्वजातिसमयधिक्कृतिः, प्ररोहः परलोकभयच्युतिः, पलाशमनार्यसत्कृतिः, प्रथमकोरकः पारदार्यपरद्रव्यापहरणरतिः, प्रसून-मास्तिक्यक्षतिः, फलमवार्यनास्तिक्यानुरक्तिश्च, कलितरोरभवत्। हा हा, महेन्द्रजालिकेन निखिल-दर्शनान्धङ्करणौषधेन विमूढमनसस्तेन कलिना प्रायशः प्राणिनः प्रकृतेः, पोता इव पद्धतेर्वातूलेन, गाव इव मेधेराभीलेन, शशा इव शाद्वलभुवश्शशादनेन, पौरा इव पुरः प्रदीपभूपेन, सुदूरमुपनीताः, भृशमवद्यामहृद्यामभेद्यामवेद्यामनिवेद्यां च काञ्चन काञ्चनीमिवाकिंचनीं दशामनुभवन्ति ॥

तथा हि कतिपये प्रभवो न केवलं पण्डितान्नाभिनन्दन्ति। अपि तान्निन्दन्ति। अपि तान्भर्त्सयन्ति। अपि तानभिगर्जन्ति। अपि तानवमन्यन्ते। अपि तानप्यनुप्रभुतामभिनयन्ति। स्वयमपि यथातथं न जानन्ति। स्वतः स्वरूपविदोपि तिरस्कुर्वन्ति। स्वैरमाचार्यान्वर्जयन्ति, स्वच्छन्दमन्यानार्जयन्ति। न श्रुतिः, नापि स्मृतिः, न पुराणं, नेतिहासः, नागमः, नाप्तवादः, न वेदांगानि, न मीमांसा, न नयविस्तरः, न धर्मशास्त्रम्, न समयः, न मतं, न जातिः, न वर्णः, नाश्रमः, न नियमः, न दैवतं, न गुरवः, न वृद्धाः, न सुहृदः, नात्माप्यन्ततः, प्रमाणममीषाम्। एषु कतिचन मनोगतमीदृगा-विष्कुर्वन्ति। परे तु सुचरितमाचरन्त इव, सूनृतमुदाहरन्त इव, सर्वधर्ममावहन्त इव, शर्वमुपचरन्त इव, शर्वाणीमुपगच्छन्त इव, तदा-यतनानि गच्छन्त इव, तदर्चां कारयन्त इव, विप्रान्मानयन्त इव, गुरूनुपचिन्वन्त इव, केवलं प्रभुताप्रदर्शनायैवमाचारमभिनयन्ति। अपि च तेषामग्रजन्मावमाननमेव नियमविधिः, अनार्यानुशासनमेव निगमवचः, अर्थकामावेव पुरुषार्थौ, अतिकुहका एवाभिमताः, अभिजाता एवाभि-यातयः, अभिज्ञा एवानभिनन्द्याः, अङ्गना एव देवताः, आम्नाया

एवाश्लीलसंज्ञापाश्वेति नियमेनानुमीयन्ते। किमेभिराहतजलूकावृत्तिभि-रब्रह्मण्यैर्ब्राह्मणब्रुवैः ॥

ते हि केचन ये च कलहंसा इव कह्वेषु, कलकण्ठा इव काकेषु, कलरवा इव कुक्कुटेषु, कपिला इव कासरेषु, कृष्णमृगा इव कौलेयकेषु, वाजिन इव वालेयकेषु, शशा इव शशारुषु, कथमपि तेषु परितस्त-स्थिवत्स्वपि, स्वकीयानि न वर्जयन्तो मतानि, नाधिक्षिपन्तो गुरुजातानि, नोत्सृजन्तः शीलानि, न निन्दन्तः शास्त्राणि, न भिन्दन्तः श्रुति-शिरांसि, न छिन्दन्तः सुचरितानि, नाचरन्तो दुश्चरितानि, नोच्चरन्तो गुरुदेव-द्विजादिदूषणाद्यश्लीलवचनानि, मूर्तिमन्त इव धर्मपुरुषाः प्रश्रित-स्वभावाः प्रभवः, सांप्रतमस्माभिस्स्मरणीयाः, तदेभ्यः साह्याय, तेभ्योपि दौश्शील्याद्यनाविष्करणाय, कृतनमस्क्रियः किंचिदिवाचार्य-चरितं यथाचरितमिह वच्मि। सत्कर्मप्रवृत्तानां सत्यवादिनां च विशेषतः परस्सहस्रं पण्डितास्सहायतां प्रपद्येरन्निति मनसिकृत्य कृतकृत्योहमत्र। "यदि दोषा दूष्यन्तां, यदि गुणा गण्यन्तां" इति किशोरचापलेन किंचिदिव सधीरमिदमुदाहर्तुमुद्यतोस्मि ॥

सहृदयविधेयः,

कुम्भघोणम् नारायणशास्त्री।

इति स्ववचनपरवशहृदयजनितदयया मरणादप्यात्मजन्यस्य संयमो वरीयान् इति विचारयुतया तया वितीर्णाभ्यनुज्ञे सद्यः प्रैषोच्चारणपरायणे च, साक्षादिव भवितव्यताग्रहेण दुर्ग्रहग्राहकरग्रहेण विससृजे तत्कमलमृदुलं चरणयुगलम् ॥

पश्चात् स एष विपश्चिदग्रणीरधिष्ठितवदरिकाश्रमानामश्रमोचिता-नामिव तुरीयाश्रममहिम्नां श्रीगोविन्दभगवत्पादानामनुग्रहेण गृहीत-यथाक्रमसंन्यासः समधीतसकलाम्नायशिरश्शेखरस्ततः प्राप्ताभ्यनुज्ञः तत्रभवद्भ्यः परमगुरुभ्यः परिव्राजकपरिबृढेभ्यः श्रीगौडपादाचार्यपादेभ्यः समुपलब्धाधिकारः, कृष्णद्वैपायनवदनारविन्दमकरन्दबिन्दुसन्दोहस्यन्दायि-तस्य ब्रह्मसूत्रप्रपञ्चस्य कृतकेतराणामप्युपनिषदामनुशिष्य भाष्याणि, आरचय्य चोपदेशसहस्रप्रमुखान् अतिसुखावगम्यमृदुलपदनिबन्धान् प्रबन्धान्, अमीषां च जगति वितिस्तारयिषया विश्वंभरांशावतीर्ण-पद्मपादमुखानामन्तेवासिनां आहितशान्तिपूर्वरचनप्रवचनः चिरमतिसुख-मविमुक्तमध्यमध्यासामास । अत्रान्तरे परावरज्ञः प्रपिपंचयिषुरिवास्य महिमसरणिं, अधिजिगमिषुरस्य मनीषां, अतिजरठवाडवभूमिकस्स-मुपसृत्य, संशयित इव क्वचित्क्वचित्कठिनीयसामात्मसूत्राणामाशयमपि विस्तरितुमनुयुज्य, तदर्पितैरमृतलवैरिव प्रतिवचोभिराह्लादितहृदयः शंकरा-चार्येति तमामन्त्र्य, "विद्वन्, इतोऽपि शरदष्षोडश भुवि भूयाः; भाष्यमेतदनुशिष्याननुशिष्याननुशिष्याः; दुर्जयो दिशो दश जीयाः; परममुना परिव्रज्यापरिशुद्धेन वपुषैव गिरीशगिरिं व्रज्याः" इति च वितीर्य वरान् विरिंचनेन सहैव प्रतस्थे भगवान् वेदव्यासः ॥

तदनु बादरायणचोदनादेव समाचिचरिषति दिक्चक्रवाल-

विजयमाचार्यचक्रवर्तिनि, पुरैव कुमारांशावतीर्णः कुमारिलः कलित-निखिलदुर्मतमर्मनिर्मथनः, सौगतानामपि दुर्गतानि वितीर्य, प्रायश्चित्त-काण्डप्रामाण्यप्रदर्शनाय गुरुमतप्रत्यादेशप्रवद्धमात्मनः पाप्मानमपनु-नोदयिषुः, उज्ज्वलतुषज्वलनमध्यमध्यास्त इति कर्णाकर्णिकयाऽऽकर्ण्य तूर्णं तस्याभ्यर्णमभ्युपेत्य तं "आर्य तुर्याश्रमस्थापनार्थमागतोऽहम्" इति धीरमुदाहरति, तेन च "कुकूलानलस्थितस्य मम पच्यन्त इवाङ्गानि, क्वथ्यन्त इव मर्माणि, दह्यत इव हृदयम्, प्लुष्यत इव विलोचनम्, उज्वाल्यत इव वपुः, तदक्षरायापि जिह्वामुत्क्षेप्तुमनलमहं, तद्विवदतु भवान् मदन्तेवासिनामधिकेन मीमांसामंदाधिकेन मण्डन-मिश्रेण; जीयतां यथाकामं; अद्य परमनुगृह्यतां, उद्ध्रियतां विपन्नोऽयं जनः" इति विलोकनमात्रोत्पन्नविज्ञानेन विज्ञेन तेन प्रार्थ्यमाने दयार्द्र-चेतसि, तस्य तत्त्वोपदेशमाधाय प्रस्थितवति मण्डनस्थानभूतं प्रथम-लक्ष्यतामयासीत्प्रथितं विद्यालयनगरम् ॥

ततः स मस्करिमहेन्द्रः, शारदावतारजातया सरसवाणीनामधेयया जायया सह सांयम्यमनवरतमकारणमकरुणमाक्षिपता मण्डनेन विवदिष्यन्, अदूष्यमपि दूष्यशतनिचितं, अतुलमपि दृश्यमानवहुतुलं, असुतरकलिप्रपंचितदर्शनमपि आहृतक्रतत्रेतानुवन्धवन्धुरं, सिन्धुर इव गभीरमम्भःपूरमगारममुष्य प्रविश्य विवदितुमवश्यं, "अवश्यममुना विवादः कार्यः, तदार्या च तव भार्या युवयोस्तटस्थमर्यादामुररीकुर्यात्" इति कृतस्थैर्यमभिनिमन्त्रितेन पाराशर्येण "जेतुराश्रममन्योऽप्यनुप्रविशे-दावयोः" इति प्रकटितपथेऽपि शपथे, तमहार्यधैर्यमहार्यवर्यमिव कदर्थयितुमना मनागिवाधरं विधुन्वन् इयतैव दवदहन इव तस्मिन्नभि-

च्यक्तकच्छटच्छटारवाटोपे पटुतरमद्वैतमतमाकन्दकन्दममन्दमसन्दमभि-
दिधक्षति कर्मनयमर्ममण्डने मण्डने, तदमृष्यन्नतिरुज्यन्नतिविकटपटुनटन-
जटाटनजटाटनपरामरकल्लोलिनीसमुल्लोलकल्लोलहल्लोहलया जृम्भितयेव
झंझावातलेखया वितीर्णाद्वैतवर्षप्रकर्षया गिरा निराचकार तन्त्रमेघानु-
बन्धगन्धबन्धुरमस्य गन्धसिन्धुरं। तदा तदभिषङ्गजडे शपथपथविगाह-
नाभिमुखे संयियांसति सकलतन्त्रवल्लभे स्ववल्लभे, स्वयमपि स्वयंभुवः
पदमवगाढुमनसि दिवमुच्चलन्त्यामुभयभारत्यां, एष परिव्राट्सम्राट्
स्वेनैव "भद्रे! विवद विस्रब्धमिह स्थाने पत्युः। अपिच मामत्ययन्ती
वल्लभमास्थापय सुस्थमत्र गार्हस्थ्ये पुनः" इति सन्धुक्षितायां अतितिक्षया
द्रक्ष्यामीत्यभिधाय विविधदर्शनप्रसंगमुत्पाद्य विवदन्त्यां सलीलममुया
विवदितुमुपचक्रमे ॥

अनन्तरमनितरधृष्यमेनमाकलय्य कलातन्त्रावतारभाजि भारत्याम्,
आचार्यचरणा विहस्य, "प्रशस्ये! दास्यसि यदि मह्यमणीयसीं काल-
कलामस्यापि पारमधिगन्ताऽस्मि विवदनवनस्य" इत्यभिधाय, विधूय
विवदनं, विनिष्क्रम्य विश्वरूपसदनात्, निशम्य च पञ्चतामुपयान्तं,
अतुलितप्रपञ्चवैभवं, अबलाशतसहस्रवल्लभमनुत्तमाभिकं, अमरुकं, अविरत-
कन्दलदमन्दानन्दकन्दलोऽपि तत्कालमभिनवमभिनन्द्य भृशं, आहूय
शिष्यान्, "इदमिदं वपुः, अपि स्यादस्य विपदविलम्बमासूचयत
मह्यम्" इत्यादिश्य सत्वरमवनिपालवपुरपरपुरप्रवेशविद्यया चतुरमविशत्।
अथ धराधिपोऽपि मूर्छितदेश्यमुदस्थात्। ततः प्रीत्या प्रत्युद्गम्यमानो
मन्त्रिभिः, प्रश्लिष्यमाणः प्रियाभिः, प्रसाद्यमानो राजकैः, प्रस्तूयमानो
वन्दिभिः, प्रगीयमानो गायकैः, प्रशस्यमानः पौरैः, प्रस्पृश्यमानो वृद्धैः,

प्रणम्यमानः किङ्करैः, कुतूहलिजनसंकुलवीथीवरं पुरमवाप्य, मृतोत्थिततया नवनवमनुरागमादर्शयता वनिताजनेन रममाणस्सततमनुरहसमवगम्य-मखिलमप्यधीयानः किंचिदिव रक्षामपि वीक्षमाणः, कृतकृत्यः कला-कलासु नृपालतन्त्रेषु च निपुणतिलकः समभूत् ॥

ततस्तथास्मिन्नत्यमरुकमन्तःपुरं पुरमपि परितोषयति, परस्परमुदित-शंकास्तदमात्यावरोधाः "अयि! कोऽप्ययमदृष्टचरो महापुरुषः । तदन्य-देवास्य कौशलं कामन्दकीये, पुनरन्यदेवास्य नैपुणं ककोककलायां, क नाम परेतः पुनरुत्तिष्ठति? तदखिलं अस्य माहात्म्यम् । अतः स एष स्थिरीकरणीयश्शरीरेऽस्मिन्" इत्याद्यालपैराहितमन्त्रास्त्रिभुवनभयंकरान् किंकरानामन्त्र्य, "भो भटाः! भुवि विचिनुत, विचारयत, वीक्षित-मखिलमपि कुणपमनुपदमुज्ज्वालयत, यदि कोऽप्यवशिष्टः शवः स वः स्वसारूप्यमर्पयेदिति निश्चिनुत" इति परुषमादिश्य विसर्जयांबभूवुः । अथ यथादिष्टमनुतिष्ठत्सु तेषु शांकरमपि वपुरवस्कन्द्य शिष्येभ्यस्त-दाशुशुक्षणिभक्ष्यतामुपनिनीषत्सु, पद्मपादमुखा यतिशेखरशिष्यास्तमर्थ-माचार्यायान्यापदेशतस्सूचयामासुः । तदनु तदभिधानप्रबोधितः प्रभुरनुपदं प्रभोर्वपुर्विहाय विहायसाधिगम्य स्वमनलसात्क्रियमाणमनुग्रहेण लक्ष्मी-नृसिंहस्य यथापुरमाधाय पुरमतिलघु मण्डनपुरमवाप्य विद्यालयमात्मनः पुनरागमं प्रतिपालयन्तीमुभयभारतीमधिवात्स्यायनतन्त्रमुज्जृम्भितैरनुपम-वचोगुम्भैरचिरादजैषीत ॥

अथ सन्तुष्टान्तरङ्गां सरसवाणीं, "अयि मातर्वसतु भवती नियत-माश्रमे मम" इत्यभ्यर्थ्य परिपूर्णमनोरथस्सुरेश्वरमपि संयमिनमारचय्य ताभ्यामात्मीयैरन्तेवसद्भिश्च सत्क्रियमाणसन्निधिः, वैभाण्डकेरत्रभवतो

महर्षेः ऋष्यशृङ्गस्याश्रमोपशल्यमुत्तुङ्गतुङ्गातरंगिणी तरङ्गवातशीतल पर्यन्त भूतलं शृङ्गगिरिमासाद्य सद्यः समुत्पाद्य कंचन मठं, प्रतिष्ठाप्य तत्र शारदां, व्यवस्थाप्य वाणीमहामहान्, आख्यापरमपि विद्यापीठं, अधिष्ठाय च स्वयं तमन्तरामिवान्तरास्मा अनुशिष्य च शिष्यानात्मभाष्येण, अध्युष्य च कतिचिदहानि वितीर्णव्याख्यानसिंहासनाभिधाने तदधिष्ठाने, संस्थाप्य च सुरेश्वरमखिलहरिज्जिगीषया स लोकगुरुरतः प्रतस्थे । अथो यथोद्दिष्टमनुतिष्ठता क्षेत्राटनमवजगाहे कांचीनगरी कर्मन्दिशेखरैः । तदा तदातनेन राज्ञा राजसेनेन नगरमभिनवतयाऽत्र निर्माप्य, प्रकल्प्य च श्रीमदेकाम्रनाथस्य श्रीकामाक्ष्या वरदस्य चायतनानि यथाविधानं, विधाय च तामुग्रकलाममलचिद्रूपामधिष्ठितगुहामार्यां त्र्यक्षवामाक्षीं कामाक्षीमुपोढप्रतिकृतिवराकृतिं, तदुग्रताशमनाय च निधाय चक्रमतोऽन्यतः समुदचलत् ॥

इत्थमनवहित्थमविकत्थमखिलामवनीमटन् निखिलदुर्मतमर्म-निर्मथनान्याधाय स्वस्ववर्णाश्रमधर्मसहकृतमेवाद्वैतमादरणीयमखिलैरिति जनानादिश्य, शैवप्रमुखानि षण्मतानि निरूप्य, द्वारवत्यां हस्तामलकं, जगन्नाथे पद्मपादं, वदरिकाश्रमे तोटकं च निक्षिप्य, तदद्वैतमुद्वेलयितु-मेतांश्चाज्ञाप्य, आसेतोरा च शीताचलात् स्थितान् देहिनश्च स्वे स्वे वर्त्मनि नियमयितुं नियन्तुं च मुख्याधिकारमन्तेवासिमुख्याय शृङ्गगिरिकृत-नियतावसथाय सुरेश्वराय समर्प्य, काश्मीरमवाप्य, सर्वज्ञपीठमधिरुह्य, दत्तात्रेयगुहामवगाह्य, सशरीरः प्रत्युद्गतप्रमथपरिवृढपरिवृतपरिसरः पुरहर-गिरिमवाप ब्रह्मविद्यावरः सकलभुवनाभयंकरः शंकरः ॥

आचार्यचरितं संपूर्णम् ॥

ओं शिवाभ्यां नमः ॥